क्रतोः काचिद्गुणहानिः । तस्मात्त्रिभिरप्यार्त्विज्यं कारयितव्यमिति प्राप्तेऽभिधीयते—'द्विजोत्तमानामार्त्विज्यं नतु क्षत्रियवैश्ययोः । ब्राह्मणार्त्विज्यनियमः क्रत्वर्थेनापि हि स्मृतः ॥' 'यज्ञं व्याख्यास्याम' इत्युपक्रम्य ब्राह्मणानामार्त्विज्यमिति स्मरन्तो यज्ञसूत्रकाराः क्रत्वर्थेन स्मरन्तीति[1] विस्पष्टमेतत् । तथाच भगवद्रामायणेऽपि 'क्षत्रियो याज्ञिको यस्य चाण्डालस्य विशेषतः । कथं सदसि भोक्तारो हविस्तस्य सुरर्षय' इति सुरा देवा ऋषयश्च ऋत्विग्भूता इति देवताहविर्भागनिराकरणात्क्रतुवैगुण्यमेव दर्शितम् । 'राजयाजकयाज्यस्य विनश्यति यथा हवि'रिति च अब्राह्मणार्त्विज्ये हविर्नाशश्च स्मृतः लिङ्गानि च दर्शितानि ब्राह्मणानामिदं हविरित्येवमादीनि । तस्माद्ब्राह्मणानामेवार्त्विज्यमिति सिद्धम् । 'मध्ये तन्त्रं यस्य येषां विधानं तेषु प्रोक्तो मुख्यतन्त्रप्रसङ्गः ॥ जिज्ञास्यो यो धर्म उक्तश्चतुर्धा स प्रज्ञातो लक्षणैर्द्वादशान्तैः' ॥ इति श्रीमहोपाध्यायपार्थसारथिमिश्रविरचितायां शास्त्रदीपिकायां द्वादशाध्यायस्य चतुर्थः पादः ॥ ४ ॥

## इति द्वादशोऽध्यायः समाप्तः ॥

---

भासमूलमिति पूर्वपक्ष्यभिमानः । **द्विजोत्तमानामिति** । क्रतुविधयो ह्यार्त्विज्यकर्तृत्वेन त्रैवर्णिकानाक्षेप्तुं प्रवर्तमाना येषां पुरुषाणां याजनं वृत्त्युपायतयावगतं तैरेव स्वसिध्युपपत्ति पर्यालोच्यात्यन्तालसस्वभावत्वादार्त्विज्यकर्त्राक्षेपविषये उदासते ततश्च ब्राह्मणानामेवार्त्विज्यं नतु क्षत्रियवैश्ययोरित्यर्थः । एवंच याजननियमशास्त्रस्य नियमार्थं प्रवृत्तस्य क्रतुविधिष्वप्युपकारेण तच्छास्त्रस्य प्रसङ्गविचारपर्यवसानादस्याधिकरणस्य साक्षादपि संगतिः संभवतीति ध्येयम् । एवंसति ब्राह्मणानामार्त्विज्यमित्यादिस्मरणस्य प्रमाण्यमप्यनुगृहीतमित्याशयेनाह—**ब्राह्मणार्त्विज्येति**।सुरर्षिशब्दस्य नारदादिपरत्वभ्रमं वारयितुं सुराश्च ऋषयश्चेति द्वन्द्वोऽत्र विवक्षित इत्याशयेन व्याचष्टे—**सुरा इति** । भारतेप्युक्तमित्याह—**राजेति** । **राजा** क्षत्रियो याजको यस्य तद्याज्यस्येत्यर्थः । **दर्शितानीति** । भाष्य इति शेषः । **ब्राह्मणानामिति** । अयं मन्त्रः दर्शपूर्णमासयोः पुरोडाशस्य चतुर्धाकरणानन्तरं निर्देशार्थः । तत्र चतुर्धाकरणस्य ऋत्विक्कर्तृकशेषभक्षणार्थत्वाद्ब्राह्मणानामित्यनेन तत्र ऋत्विजामेव निर्देश इति ब्राह्मणानामेवार्त्विज्ये इदं लिङ्गम् । आदिशब्देन तस्मिन्नेव मन्त्रे निर्भक्तो ब्राह्मणो नेहाब्राह्मणस्यास्तीत्यब्राह्मणस्य भागनिषेधः । तथा'हुतादो ये ब्राह्मणा यदन्वाहार्यमाहरन्ती'ति दर्शपूर्णमासयोरन्वाहार्यस्यादनीयेषु ऋत्विक्षु ब्राह्मणशब्दनिर्देश इत्येवमादयो गृह्यन्ते । उक्तमध्यायार्थं सुखप्रतिपत्त्यर्थं पूर्वार्धेन संगृह्णाति—**मध्ये तन्त्रमिति** । **यस्य** मध्ये तन्त्रं यदीये येषामन्येषां विधानं तेषु मुख्यस्य प्रथमप्रवृत्ततन्त्रस्य तस्य यत्तन्त्रं तत्प्रसङ्गोस्मिन्नध्याये प्रोक्त इत्यर्थः । शास्त्रार्थमपरार्धेन संगृह्णाति—**जिज्ञास्य इति** । 'अथातो धर्मजिज्ञासे'ति स्वरूपप्रमाणसाधनफलैश्चतुर्भिः प्रकारैर्यो धर्मो जिज्ञास्यत्वेन प्रतिज्ञातः स धर्मः प्रथमादिभिर्द्वादशान्तैरध्यायैः प्रज्ञातः । धर्मनिर्णयरूपं फलं सिद्धमित्यर्थः ॥

**इति श्रीनिट्टिलकुलतिलकसूरभट्टमहोपाध्यायतनूभवस्य वेङ्कटाद्रियज्वगुरुचरणानुजस्य सोमनाथसर्वतोमुखयाजिनः कृतौ शास्त्रादीपिकाव्याख्यायां मयूखमालिकायां द्वादशाध्यायस्य चतुर्थः पादः ॥ ४ ॥**

१ तीति स्पष्टमेव.

**समाप्तेयं सव्याख्या शास्त्रदीपिका ।**

# शास्त्रदीपिकाधिकरणसूत्रवर्णक्रमकोशः।

# अधिकरणसूत्रवर्णक्रमकोशः